अथाग्निमुखप्रयोगः । अथ विवाह्यकन्या । अथर्तुशान्तिम् । अथातो मृत्तिकास्नानम् । अथातोऽर्कोद्वाहम् । अथातः पञ्चमीश्राद्धम् । अथातो वनस्पतिहोमम् । अथात उग्ररथशान्तिविधिम् ॥ ८

इति बोधायनीयगृह्यशेषसूत्रे पञ्चमप्रश्नः.

इति बोधायनीयगृह्यशेषसूत्रं समाप्तम्.

---

## अथ बोधायनीयं पितृमेधसूत्रम्.

## प्रथमः प्रश्नः.

---

अथ यद्याहिताग्निर्निर्मारं गच्छत्युपतपता वा जरया वाऽग्निष्ठ* एवास्य यजमानायतने शयनं कल्पयेयुर्जघनेन गार्हपत्यम् ॥ १

तदस्मै भक्षानाहरन्ति यावदलं भक्षाय मन्यते ॥ २

स यद्यु हागदो भवति पुनरेति । यद्यु वै प्रैति न पयस्समासिञ्चति ॥ ३

अथैतदग्निहोत्रं सायमुपक्रमं प्रातरपवर्गमित्याचार्या ब्रुवते ॥ ४

तत्रोदाहरन्ति—स यदि सायं हुतेऽग्निहोत्रे प्रेयात् प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् ॥ ५

अथ यदि प्रातरग्निहोत्रे हुते कुशलम् ॥ ६

अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थावित्याचार्या ब्रुवते ॥ ७

तत्रोदाहरन्ति—स यदि पौर्णमास्यां वृत्तायां प्रेयात् प्रतिकृष्यामावास्यां यजेत ॥ ८

अथ यद्यमावास्यायां वृत्तायां कुशलम् ॥ ९

---

* ख. ग्निष्ठत.

अथ यस्योभे पर्वणी अतिपन्ने स्यातामतिपन्नप्रायश्चित्तं कुर्वीत ॥ १०

अथ यद्यार्तस्याग्निहोत्रं विच्छिद्येत यद्यस्य पुत्रो वाऽन्तेवासी वाऽलं कर्मणस्स्यात् । सोऽरण्योरग्नीन् समारोह्योदवसाय मथित्वाऽग्नीन् विहृत्याग्नये नन्तुमते पुरोडाशमष्टाकपालं निर्वपति शरावं दक्षिणां ददाति सा प्रसिद्धेष्टिस्संतिष्ठते ॥ ११

अथ यदि विप्रक्रान्ते प्रेयात्तूष्णीमेतत्तन्त्रं संस्थाप्यापो भक्षानभ्यवहरेयुः—'अपो भक्षानभ्यवहरन्ति' इति विज्ञायते ॥ १२

अथास्याग्नीनुपनिर्हृत्येमां दिशं विहारं कल्पयित्वा दक्षिणाप्राचीम्—'एषा हि पितृणां प्राची दिक्' इति विज्ञायते ॥ १३

अथैनमादायान्तरेण वेद्युत्करौ प्रपाद्य जघनेन गार्हपत्यमुपसादयन्त्यत्र हविर्निरुप्यत इति ॥ १४

अथैनमादायान्तर्वेदि प्राक्शिरसमासादयन्त्यत्र हविरासाद्यत इति ॥ १५

अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा प्रेतस्य दक्षिणं बाहुमन्वारभ्याहवनीये जुहोति ॥ १६

इति बोधायनपितृमेधसूत्रे प्रथमप्रश्ने

प्रथमः खण्डः.

---

'परेयुवांसं प्रवतो महीरनु बहुभ्यः पन्थामनपस्पशानम् । वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्यत स्वाहा' इति ॥ १

एतेनैव गार्हपत्ये जुहोति । तूष्णीमन्वाहार्यपचने हुत्वा ॥

अथैनमादायान्तरेण वेद्युत्करावुदङ्ङुपनिर्हृत्याथैनं परिश्रयन्ति ॥ ३

तस्य दक्षिणाद्वारं कुर्वन्ति ॥ ४

अथास्य केशश्मश्रुणी वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत ॥ ५

अथास्य दक्षिणं कुक्षिमपावृत्य निष्पुरीषं कृत्वाऽद्भिः प्रक्षाळ्य सर्पिषाऽऽन्त्राणि पूरयित्वा दर्भैः संसीव्यति ॥ ६

तदु तथा न कुर्यात् 'क्षोधुकाऽस्य प्रजा भवति' इति विज्ञायते ॥ ७

अपि वा सपुरीषमेवाप्लाव्याच्छाद्यालङ्कृत्याथैनमादायान्तरेण वेद्युत्करौ प्रपाद्य जघनेन गार्हपत्यमासन्द्यां कृष्णाजिने दक्षिणाशिरसं संवेश्य शिरस्तो नळदमालां प्रतिमुच्य पत्तोऽदशेनाहतेन वाससा प्रोर्णोति ॥ ८

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
द्वितीयः खण्डः.

'इदं त्वा वस्त्रं प्रथमं न्वागन्' इति ॥ १

अथैतदपोहति—'अपैतदूह यदिहाबिभः पुरा। इष्टापूर्तमनुसंपश्य दक्षिणां यथा ते दत्तं बहुधा विबन्धुषु' इति ॥ २

तस्य पुत्रोऽन्तेवासी वा पत्नी वा परिदधीत तदु हाजरसमेव वसीताहश्शेषं वा ॥ ३

अथ त्रीन् छगलानुपकल्पयते ॥ ४

अथ यदि न छगला भवन्त्यन्तर्वेदि परागवहतानां कृष्णानां व्रीहीणामन्वाहार्यपचने त्रीन् चरूञ्छ्रपयन्त्येकं वा ॥५

गार्हपत्य आमिक्षां श्रपयन्ति ॥ ६

अथैनान् सम्भारानुपकल्पयते—दधि च सर्पिर्मिश्रमाज्यं चोदकुम्भं च दर्भांश्च परिस्तरणीयान् हिरण्यं चाजं च* शासं चेडसूनं च कुम्भीं च प्रच्यावनीं सिकताश्च शुल्बे च तिस्रश्च पर्णशाखाः ॥ ७

कथमु खल्वेनं दहेयुरिति?—यो बहुयाजी स्यात्तं पूर्वाग्निना दहेयुरित्येतदेकं† निर्मन्थ्यैरेनं दहेयुरित्येतदेकमुत्तपनीयैरेनं दहेयुरित्येतदेकमपि वा तिस्र उलप‡राजीरादीप्य यत्राग्नयस्सङ्गच्छेरंस्तत्रोल्मुकमादीप्य तेनैनं दहेयुरित्येतदपरम् ॥

इति बोधायनपितृमेधसूत्रे प्रथमप्रश्ने

तृतीयः खाण्डः.

---

*ख. चाजिनं च. †ख. 'अजस्रैरेनं दहेयुरित्येतदेकम्' इत्यधिकम्. ‡ख. उलूम.

अथातोऽनुस्तरणीकल्पः—

आनयन्त्येतां कृष्णां कूटां* जरतीं मूर्खां तज्जघन्यामनुस्तरणीं पदिबद्धाम् । 'सव्यपादि बद्धा भवति' इति विज्ञायते ॥ १

एतस्मिन् कालेऽस्यामात्यास्तिस्रभिस्तिस्रभिरङ्गुळीभिरुपहत्य पांसूनंसेष्वावपन्ते— 'खल्वघं न्वा स्यादघं नो एवाघम्' इति ॥ २

अस्य भार्याः कनिष्ठप्रथमाः प्रकीर्णकेश्यो व्रजेयुः पांसूनंसेष्वावपमानाः—'खल्वघं न्वा स्यादघं नो एवाघम्' इति ॥ ३

एतस्मिन् काले गार्हपत्ये पालाशं काष्ठमादीप्याथोल्मुकप्रथमाः प्रतिपद्यन्तेऽथ स्वधितिरथाग्नयोऽथ पात्राणि दध्याज्यं दर्भा राजगवीति यच्चान्यदप्येवंयुक्तमिति ॥ ४

अथैनमेतयाऽऽसन्द्या तल्पेन कटेन वा संवेष्ट्य दासाः प्रवयसो वा वहेयुः ॥ ५

अथैनमनसा वहन्तीत्येकेषाम् ॥ ६

अनश्चेद्युञ्ज्यात्—'इमौ युनज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां यमस्य सादनं सुकृतां चापि गच्छतात्' इति समारोप्याग्नीन् हरन्ति । समारोप्य वाऽन्तरेण वा कृत्वाऽग्नीन् हरन्त्यथैनमाददते ॥ ७

---

*ख. कृशां.

आदीयमानमनुमन्त्रयते—'पूषा त्वेतश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः। स त्वैतेभ्यः परिददात्पितृभ्योऽग्निर्देवेभ्यस्सुविदत्रेभ्यः' इति ॥ ८

तृतीयमेतस्याध्वनो गत्वा निदधाति ॥ ९

अथैतेषां छगलानामेकमशस्त्रेण प्रक्ष्णोति ॥ १० 

अथ यदि न छगला भवन्ति चरुं मेक्षणेन प्रयौति ॥ ११

यद्यु वा एक एव च भवति चरोस्तृतीयं मेक्षणेन प्रयौय लोष्टानुपसंहृत्य तेषूपमृज्य कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः ॥ १२

एवममात्या एवं स्त्रियः संयम्य केशान्यथेतं त्रिः पुनः प्रति परियन्ति ॥ १३

अथैनमाददते ॥ १४

आदीयमानमनुमन्त्रयते ॥ १५

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
चतुर्थः खण्डः.

---

'पूषेमा आशा अनुवेद सर्वास्सो अस्माꣳ अभयतमेन नेषत्। स्वस्तिदा अघृणिस्सर्ववीरोऽप्रयुच्छन्पुर एतु प्रविद्वान्' इति ॥ १

अर्धमेतस्याध्वनो गत्वा निदधाति ॥ २

अथैतेषां छगलानामेकमशस्त्रेण प्रक्ष्णोति ॥ ३

अथ यदि न छगला भवन्ति चरुं मेक्षणेन प्रयौति ॥ ४

यद्यु वा एक एव भवति चरोरर्धं मेक्षणेन प्रयौय लोष्टानुपसंहृत्य तेषूपमृज्य कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः ॥ ५

एवममात्या एवं स्त्रियः ॥ ६

संयम्य केशान्यथेतं त्रिः पुनः प्रति परियन्त्यथैनमाददते॥

आदीयमानमनुमन्त्रयते—'आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् । यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवस्सविता दधातु' इति ॥ ८

समस्तमेतस्याध्वनो गत्वा निदधाति ॥ ९

अथैतेषां छगलानामेकप्रशस्त्रेण प्रुक्ष्णोति ॥ १०

अथ यदि न छगला भवन्ति चरुं मेक्षणेन प्रयौति ॥ ११

यद्यु वा एक एव भवति चरोरवशिष्टं मेक्षणेन प्रयौय लोष्टानुपसंहृत्य तेषूपमृज्य कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः ॥ १२

एवममात्या एवं स्त्रियः ॥ १३

संयम्य केशान्यथेतं पुनः प्रतिपरियन्त्यथैतां चरुस्थालीं सुसम्भिन्नां भिनत्ति यथाऽस्यै कपालेषूदकं न तिष्ठेदिति ॥

यच्चातस्स्त्रिय आहुस्तत्कुर्वन्ति ॥ १५

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
पञ्चमः खण्डः.

अथास्यावकाशं जोषयते—पश्चादुदकमनूषरमनुपहतमविस्रद्वार्यमनिरिणमसुषिरमभङ्गुरमजागार्तंबहुलौषधि यत्र क्षीरिणो वृक्षा ओषधयो वाऽभ्याशे न स्युर्यस्माद्दक्षिणाप्रतीच्य आपश्शनैर्गत्वा प्रतिष्ठेरंस्ताः प्रदक्षिणमभिपर्यावृत्य महानदीमभ्यवेत्य प्राच्यस्सम्पद्येरन् दक्षिणाप्रत्यक्प्रवणमित्येकेषामुदक्प्रत्यक्प्रवणमित्येकेषामपि वा यस्समभूमिः ॥ १

तस्माद्वीरुध उद्धारयन्ति—काळां च पृश्निपर्णीं च तिल्वकां चापरकां चापामार्गं च शुण्ठीं च बहुपुत्रिकां च विस्रंसिकां च राजक्षपर्णीं* च याश्चान्याः क्षीरिण्य ओषधयो भवन्ति ॥ २

अथैनं मध्ये शकलेनोद्धत्यावोक्ष्य हिरण्येन परिक्रीय पर्णशाखया पेटयति† 'अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै' इति ॥ ३

तद्दारुचितां कुर्वन्ति दक्षिणाप्राचीम्—'एषा हि पितॄणां प्राची दिक्' इति विज्ञायते ॥ ४

जघनेन चितां दक्षिणाप्राचीं विहारं कल्पयित्वा दर्भैराग्निं चितां चापसलैः परिस्तीर्य दक्षिणेन विहारं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि संसादयाति ॥ ५

---

* ख. राजपर्णीं.

† ख. ऽपकर्षति,

एकपवित्रेण प्रोक्षणीं संस्कृत्य पात्राणि प्रोक्ष्य प्रेतं चितां चाज्यं निरूप्याधिश्रित्य पर्यग्निकृत्वोद्वास्योत्पूय तूष्णीं दर्भैः पात्राणि संमृज्य तूष्णीं दार्शिकपौर्णमासिकान्याज्यानि गृहीत्वाऽथास्य राजगवीमुपाकरोति ॥ ६

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने षष्ठः खण्डः.

---

'भुवनस्य पत इदं हविः। अग्नये रयिमते स्वाहा' इति ॥ १

तस्यां निपद्यमानायां सव्यानि जानून्युपनिघ्नन्ते— 'पुरुषस्य सयावर्यपेदघानि मृज्महे । यथा नो अत्र नापरः पुरा जरस आयति' इति ॥ २

तामन्यत्रैव शस्त्रात् घ्नन्ति ॥ ३

अथास्यै प्राणान्विस्रस्यमानाननुमन्त्रयते— 'पुरुषस्य सयावरि वि ते प्राणमसिस्रसम् । शरीरेण महीमिहि स्वधयेहि पितॄनुप प्रजयाऽस्मानिहावह' इति ॥ ४

उपोत्थाय पांसूनवमृशन्ते—'मैवं मांस्ता प्रियेऽहं देवी सती पितृलोकं यदैषि । विश्ववारा नभसा सं व्ययन्त्युभौ नो लोकौ पयसाऽभ्याववृथ्स्व' इति ॥ ५

अथ संशास्त्यङ्गादङ्गादनास्थिकानि पिशितानि प्रच्छिद्य

संह्लादयन्तः* प्रच्यावयन्त एकोल्मुकेन श्रपयन्तः प्रज्ञातां वपां निधत्त प्रज्ञातं हृदयं प्रज्ञातौ च मतस्नू प्रज्ञाता जिह्वा प्रज्ञातं चर्म सशीर्षवालपादं प्रज्ञातं मेद इति ॥ ६

अथास्य भार्यामुपसंवेशयति ॥ ७

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने सप्तमः खण्डः.

---

'इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्य प्रेतम् । विश्वं पुराणमनु पालयन्ती तस्यै प्रजां द्रविणं चेह धेहि' इति ॥ १

तां प्रतिहितस्सव्ये पाणावभिपद्योत्थापयति—'उदीर्ष्व नार्यभि जीवलोकमितासुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभि संबभूव' इति ॥ २

अथास्य सुवर्णेन हस्तौ निमृजते—'स्वर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम' इति ब्राह्मणस्य ॥ ३

'धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम' इति क्षत्रियस्य ॥ ४

---

* ख. संसादयन्तः.

'मणिं हस्तादाददाना मृतस्य श्रियै विशे पुष्ट्यै बलाय। अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम' इति वैश्यस्य ॥ ५

यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ६

अथैनमेतयाऽऽसन्द्या सह चितायामादधाति ॥ ७

अपकृष्य रज्जूमासन्दीमपविध्यन्ति ॥ ८

कृष्णाजिने चैव रज्जुषु चोत्तानश्शेते ॥ ९

तस्य प्राणेषु हिरण्यशकलान् प्रत्यस्य नाना चतुर्गृहीताभ्यामक्ष्णोर्जुहोति—'चित्रं देवानामुदगादनीकम्' इत्यर्धर्चाभ्यां जुहोतीति विज्ञायते ॥ १०

कथमु खल्वस्य पात्राणि नियुञ्ज्यादिति? दध्ना सर्पिर्मिश्रेण पूरयित्वा मुखेऽग्निहोत्रहवणीं नासिकयोस्स्रुवावक्ष्णोर्हिरण्यशकलावाज्यस्रुवौ वा प्रत्यस्य कर्णयोः प्राशित्रहरणं भित्त्वा शिरसि कपालानि ललाटे एककपालं शिरस्तः प्रणीताप्रणयनं चमसं निदधाति ॥ ११

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
अष्टमः खण्डः.

---

'इममग्ने चमसं मा विजीह्वरः प्रियो देवानामुत सोम्यानाम्। एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम्' इति ॥ १

दक्षिणे हस्ते जुहूं सव्य उपभृतमुरसि ध्रुवामरणीं च दक्षिणेंऽसे मेक्षणं सव्ये पिष्टोद्वपनीं पृष्ठे स्फ्यमुदरे दारुपात्रीं पार्श्वयोश्शूर्पं छित्वा वैकं कुक्ष्योश्चमसौ सान्नाय्यापिधानीं चेडोपहवनं च वङ्क्षणयोस्सान्नाय्यकुम्भ्यौ श्रोण्योरन्वाहार्यस्थालीं चरुस्थालीं च पादयोराग्निहोत्रस्थालीमाज्यस्थालीं चोर्वोरुलूखलमुसले अण्डयोः दृषदुपले शिश्ने वृषारवं शम्यां च शिरस्त उपसादनीयं कूर्चं निदधाति पत्त उपावहरणीयमथातिशिष्टानि पात्राण्यन्तरेण सक्थिनी निर्वपेयुः ॥ २

अपो मृण्मयान्यभ्यवहरेयुरपो मृण्मयान्यभ्यवहरेयुः 'अपो मृण्मयान्यभ्यवहरन्ति' इति विज्ञायते ॥ ३

अत्रैव वा निदध्युः ॥ ४

ब्राह्मणेभ्योऽयस्मयानि च लोहमयानि च दद्युः ॥५

तेषां यान्यासेचनवन्ति* तानि दध्ना सर्पिर्मिश्रेण पूरयेत्संस्पृशोदितराण्यरिक्तानि पात्राणि भवन्तीति विज्ञायते॥

अत्रैव वाऽध्यस्यन्त्युपवाजिनं खारीं नल्वमिति ॥ ७

अथास्यामीक्षां व्युद्धृत्य पाण्योरादध्यात्—'श्यामशबळाभ्यां त्वा' इति दक्षिणे दक्षिणं सव्ये सव्यं हृदये हृदयमास्ये जिह्वां यथाङ्गमङ्गैरितराणि संप्रच्छाद्य वपयाऽ-

---

*ख यान्यभ्यक्तानि.

स्य मुखं प्रच्छादयति 'मेदसा स्रुचौ प्रोर्णोति' इति विज्ञायते ॥ ८

अथैनं चर्मणा सशीर्षवालपादेनोत्तरलोम्ना प्रोर्णोति ॥

इति बोधायनपितृमेधसूत्रे प्रथमप्रश्ने
नवमः खण्डः.

---

'अग्नेर्वर्म परिगोभिर्व्ययस्व संप्रोर्णुष्व मेदसा पीवसा च । नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधद्विधक्ष्यन्पर्यङ्खयातै' इति । 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इति विज्ञायते ॥ १

अथ यद्यनुस्तरणीं नानुस्तरिष्यन्तो भवन्त्युत्सृजेद्वैनां ब्राह्मणाय वा दद्यात् । 'दत्ता त्वेव श्रेयसे भवति' इति विज्ञायते ॥ २

अथ यद्युत्स्रक्ष्यन् भवति तां त्रिरपसलैरग्निं पर्याणयति—'अपश्याम युवतिमाचरन्तीम्' इति तिसृभिस्त्रिः पर्याणीयोत्तरतः प्रतिष्ठितामनुमन्त्रयते—'ये जीवा ये च मृता ये जाता ये च जन्त्याः' इति ॥ ३

अथास्याः कर्णलोमान्युत्पाट्य पाण्योरेवादध्याद्दक्षिणे दक्षिणानि सव्ये सव्यानि ॥ ४

अथैनामुत्सृजति—'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रणुवोचं चिकितुषे जनाय

मा गामनागामदितिं वधिष्ट। पिबतूदकं तृणान्यत्तु। ओमुत्सृजत' इति ॥ ५

अथैनमुपोषयति पुरस्तादाहवनीयेन दक्षिणतोऽन्वाहार्यपचनेन पश्चात् गार्हपत्येनोत्तरतस्सभ्यावसथ्याभ्याम् ॥ ६

अत्राप्युत्प्रेक्षा भवन्ति तं यद्याहवनीयः प्रथममभ्युज्ज्वलयेद्देवलोकमभ्यजैषीदित्येनं जानीयादथ यद्यन्वाहार्यपचनः पितृलोकमथ यदि गार्हपत्यो गन्धर्वलोकमथ यदि सभ्यावसथ्यौ सप्तर्षीणां लोकमथ यदि सर्व एव सहाभ्युज्ज्वलयेयुः ब्रह्मलोकमभ्यजैषीदित्येनं जानीयात् ॥ ७

यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ८

इति बोधायनपितृमेधसूत्रे प्रथमप्रश्ने
दशमः खण्डः.

---

अथैनमादीपयत्यादीप्यमानमनुमन्त्रयते—'मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरम्। यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात्पितृभ्यः' इति ॥

प्रज्वलितमनुमन्त्रयते—'शृतं यदा करसि जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः। यदा गच्छात्यसुनीतिमेतामथा देवानां वशिनीर्भवाति' इति ॥ २

अत्र षड्ढोतारं व्याचष्टे—'सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ

यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः' इति ॥ ३

अत्रैतमजं चित्यन्तेऽबलेन शुल्बेन बध्नाति—'अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः। यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमं सुकृतां यत्र लोकाः' इति ॥ ४

स यद्यहो द्रवति नैनं प्रत्यानयति। प्रागु हैक उपोषणात्। उदकुम्भेन त्रिरपसलैः परिषिञ्चति वारुणीभिः ॥५

तत्प्रच्छाद्येन पर्णमयेन स्रुवेणोपघातं जुहोति—'य एतस्य पथो गोप्तारस्तेभ्यस्स्वाहा' इति नव स्रुवाहुतीः॥६

अथान्यां जुहोति—'अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि। वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमं सुकृतां यत्र लोकास्स्वाहा' इति ॥ ७

अत्रैव स्रुवमनु प्रहरति ॥ ८

अत्रैतान्यवदानानीडसूने प्रच्छाद्यौ*दुम्बर्या दर्व्योपघातं जुहोति—'अग्नये रयिमते स्वाहा' इति ॥ ९

अत्रैव दर्वीमनु प्रहरति जघनेन चिताम् ॥ १०

अथैनं नवर्चेन याम्येन सूक्तेनोपतिष्ठते—'प्रकेतुना बृहता भात्यग्निः' इति ॥ ११

आसीनः पराचाऽनुशंसति वा ॥ १२

---

* ख. नीडासूने प्रच्छिद्यौ.

जघनेन दहनं तिस्रो दक्षिणाप्राचीः कर्षूः कुर्वन्ति ॥ १३

अथैना अद्भिरनुप्लाव्य सिकताभिरनुप्रकीर्य संगाहन्ते यवीयान्यवीयान् पूर्वःपूर्वस्संगाहन्ते ॥ १४

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
एकादशः खण्डः.

---

'अश्मन्वती रेवतीस्संरभध्वमुत्तिष्ठत प्रतरता सखायः। अत्रा जहाम ये असन्नशेवाश्शिवान् वयमभि वाजानुत्तरेम' इति॥

जघनेन कर्षूः पर्णशाखे निहत्यावलेन शुल्बेन बध्वा विनिस्सर्पन्ति—'यद्वै देवस्य सवितुः पवित्रं सहस्रधारं विततमन्तरिक्षे। येनापुनादिन्द्रमनार्तमार्त्यै तेनाहं मां सर्वतनुं पुनामि' इति ॥ २

जघन्यो व्युदस्यति—'या राष्ट्रात्पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः। धातुस्तास्सर्वाः पवनेन पूताः प्रजयाऽस्मान्रय्या वर्चसा संसृजाथ' इति ॥ ३

यत्रापस्तद्यन्त्यनवेक्षमाणा अपस्सचेला दक्षिणामुखा स्समृत्तिका आप्लावन्ते*—'धाता पुनातु सविता पुनातु' इति ॥ ४

नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याचम्यादित्यमुपतिष्ठते—'उद्वयं तमसस्परि' इति ॥ ५

अथ गृहानायान्ति यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ६

---

* ख. आप्लवन्ते.

एतस्मिन् कालेऽस्यामात्याः केशश्मश्रूणि वापयन्ते ये सान्निधाने भवन्ति । विकल्पमितरेषु वापयेरन्वा निवर्तयेरन् वा ॥ ७

श्रुतवता तु वप्तव्यमेवासन्निधानेऽपीति बोधायनस्य कल्पः ॥ ८

न समावृत्ता वपेरन्नन्यत्र विहारादित्येके ॥ ९

मातरि पितर्याचार्य इति त्रिरात्रमक्षारलवणभोजनमधश्शयनं ब्रह्मचर्यं त्र्यहं षडहं द्वादशाहं संवत्सरं यावत् ग्रहणं द्वादशाहावराध्यँ परमगुरुष्वेवमघोदकमितरेषु त्रिरात्रं यावज्जीवं प्रेतपत्नी ॥ १०

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
द्वादशः खण्डः.

---

अथ यद्याहिताग्निरन्यत्र प्रेयाद्दीप्यमानैराहूयमानैरासीरन्यावदस्य शरीरमग्निभिस्समागमयेरन्निति ॥ १

अथैनदभिवान्यायै पयो दोहयित्वा गार्हपत्येऽभिविष्यन्दयित्वाऽऽहवनीयेऽभिविष्यन्दयेत्—'अधस्तात् समिधमाहरन्त्युपरिष्टाद्धि देवेभ्यो हरन्ति' इति विज्ञायते ॥ २

अथैनमादायान्तरेण वेद्युत्करौ प्रपाद्य प्रसिद्धमुपोषेयुरिति॥

अथ यदि दग्धस्स्यादस्थान्याहृत्यान्तर्वेदि शरीराणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ ४

अथ यद्यस्थानि न विन्देयुरन्तर्वेदि त्रीणि षष्टिशतान्याहृत्य पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुः ॥ ५

अथ यदि दिगेव प्रज्ञायते तां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्राहमाहूय पर्णत्सरूणामेव कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ ६

अथ यदि दिगपि न प्रज्ञायते इमां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्राहमाहूय पर्णत्सरूणामेव कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ ७

अथ 'यद्याहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति विज्ञायते । 'पुरुषाहुतिर्ह्यस्य प्रियतमा' इत्येतामनुव्याख्यां दहनस्य ब्रुवतेऽथाप्युदाहरन्ति—'शरीरदायादा ह वा अग्नयो भवन्ति' इति ॥ ८

तदपि दाशतये विज्ञायते—'शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः' इति ॥ ९

इति बोधायनीयापितृमेधसूत्रे प्रथमप्रश्ने
त्रयोदशः खण्डः

---

अथातस्सञ्चयनम्—एकस्यां व्युष्टायां तिसृषु वा पञ्चसु वा सप्तसु नवसु वैकादशसु वाऽयुग्मा रात्रीरर्धमासान्मासानृतून् संवत्सरं वा संपाद्य संचिनुयुरिति ॥ १

स उपकल्पयते—सतं च क्षीरं चाज्यं चोदकुम्भं च दर्भांश्च परिस्तरणीयान् नीललोहिते सूत्रे बृहतीफलं चाश्मानं चापामार्गं च वेतसशाखां च सिकताश्च शुल्बं च पर्णखाखे च ॥ २

अत एव दहनादङ्गारान्निवर्त्य तिस्रोऽवसर्जनीया जुहोति—'अवसृज पुनरग्ने पितृभ्यः' 'संगच्छस्व पितृभिः' 'यत्ते कृष्णश्शकुन आतुतोद' इति ॥ ३

अथैतस्मिन् सते क्षीरं चोदकुम्भं च निषिच्य वेतसशाखयाऽवोक्ष्यन् संपादयत्यप्रकाथ* यंच्छरीराणि—'यं ते अग्निममन्थाम' इति षड्भिः ॥ ४

प्रथमां वोत्तमां वा द्विरभ्यावर्तयेयुः ॥ ५

अथैनदादहनमुदकुम्भैः स्ववोक्षितमवोक्ष्य याऽस्य स्त्रीणां मुख्या सव्ये पाणौ बृहतीफलं नीललोहिताभ्यां सूत्राभ्यां विग्रथ्याश्मानमन्वास्थायापामार्गेण सकृदुपमृज्यानन्वीक्षमाणा पत्तश्शिरस्तो वाऽस्थि गृह्णाति—'उत्तिष्ठातस्तनुवं संभरस्व मेह गात्रमवहा मा शरीरम् । यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवस्सविता दधातु' इति ।

---

* ख. प्रक्कथ.

'इदं त एकम्' इति द्वितीयम्। 'पर ऊत एकम्' इति तृतीयम्। 'तृतीयेन ज्योतिषा संविशस्व' इति चतुर्थम्। 'संवेशनस्तनुवै चारुरेधि' इति पञ्चमम्। 'प्रियो देवानां परमे सधस्थे' इति षष्ठम्॥ ६

अथैनं सुसञ्चितं सञ्चित्य भस्म पिण्डं करोति तं तथा करोति यथाऽस्य कपोतः छायायां नोपविशेदिति॥ ७

अथैनमपरिमितैः क्षुद्रमिश्रैरश्मभिः परिचिनोति न तेन परिचिनुयात् यथाऽस्य कपोतः छायायामुपविशेदिति॥ ८

अथैतान्यस्थान्यद्भिः प्रक्षाळ्य कुम्भे वा सते वा कृत्वाऽऽदायोपोत्तिष्ठति॥ ९

इति बोधायनीयतृमेधसूत्रे प्रथमप्रश्ने
चतुर्दशः खण्डः.

---

'उत्तिष्ठ प्रेहि भद्रवौकः कृणुष्व परमे व्योमन्। यमेन त्वं यम्या संविदानोत्तमं नाकमाधिरोहेमम्' इति॥ १

तं गर्तदेशं* कुम्भं निधायाथातो हविर्यज्ञियं निवपनम्—यं कामयेतानन्तलोकस्स्यादिति तमस्या उद्धते सिकतोपोप्ते परिश्रिते निदधाति—'पृथिव्यास्त्वा आक्षित्या अपामोषधीनां रसे स्वर्गे लोके नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयाम्यसावित्यनन्तलोको हैव भवति' इति विज्ञायते॥ २

---

*ख. प्रतिवेशं.

जघनेन कुम्भं तिस्रो दाक्षिणाप्राचीः कर्षूः कुर्वन्तीति तत्पुरस्ताद्व्याख्यातम् ॥ ३

जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बध्वा विनिस्सर्पन्तीति तत्पुरस्ताद्व्याख्यातम् ॥ ४

यत्रापस्तद्यन्त्यनवेक्षमाणा अपस्सचेला दक्षिणामुखास्स-मृत्तिका आप्लावन्ते*—'धाता पुनातु सविता पुनातु' इति ॥

नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याचम्यादित्यमुपतिष्ठते—'उद्वयं तमसस्परि' इति ॥ ६

अथ गृहानायन्ति । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ७

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
पञ्चदशः खण्डः.

---

ते यदि पुनर्धक्ष्यन्तो भवन्ति पुरस्तादेवावशेषयेयुर्जुहूं चारणीं च कृष्णाजिने† दृषदुपले शम्यामिति ॥ १

अथ यद्यनुप्रहृतानि स्युर्यस्य चैवैकस्याश्वत्थस्यारणी गृहीत्वाऽग्निं मथित्वोपसमाधाय संपरिस्तीर्य दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषूपरि कृष्णाजिने शम्यायां दृषदुपले युक्त्वाऽथैतान्यस्थान्येवाञ्जनं पिष्ट्वा पुराणसर्पिषा समुदायुत्य जुह्वा प्रसेकं जुहोति—'अस्मात्त्वमधिजातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा' इति ॥ २

---

* आप्लवन्ते.

† ख. कृष्णाजिनं.

अत्रैवानुप्रहरति जुहूं चारणीं च कृष्णाजिनं दृषदु-
पले शम्यामिति ॥ ३

अत्राप्युत्प्रेक्षा भवन्ति तं यदि ज्वालोर्ध्वमभ्युज्ज्वलयेत्
देवलोकमभ्यजैषीदित्येनं जानीयादथ यदि मुहूर्तमुदेत्य व्या-
भ्रमेदन्तरिक्षलोकमित्येनं जानीयादथ यदि भूम्यामनुविनये*-
दिहैवेति जानीयाद्यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ४

न चास्यात ऊर्ध्वं श्मशानं कर्तुमाद्रियेताकृतीर्वा स्या
द्दहने वपेदपस्याभिर्वा परिचिनुयात् ॥ ५

तमभ्येवादित्यस्तपत्यभिवातः पवते तमापस्स्पृशन्ति स
नादित्यस्य सकाशान्न वायोर्नापां स्पर्शाच्छिद्यते यमेवं नि-
दध्युर्य उ चैनदेवं विदुरेवमु हाहीना†हाश्वत्थ्या हायनास्तं
हो हैवं चक्रे तस्यो हेमेऽहीना हाश्वत्थ्या हायनाश्श्रेयसि
श्रेयसि ह्यस्मै व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी प्रजा
भवति यमेवं निदध्युर्य उ चैनदेवं विदुरेतां ह कौषीतकि-
र्विदांचकार तस्यो हेमे कौषीतकिनश्श्रेयसि श्रेयसि ह्यस्मै
व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी प्रजा भवति यमेवं
निदध्युर्य उ चैनदेवं विदुर्य उ चैनदेवं विदुः ॥ ६

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
षोडशः खण्डः.

---

* ख. यदीमामनुविशे.

† ख. रेवमुखल्वाहाहीना.

एकाहं धुनुयुस्त्रीण्यहानि धुनुयुः पञ्चसप्तनवैकादशाहान्यर्धमासं धुनुयुरयुग्मा रात्रीरर्धमासान्मासानृतून् संवत्सरं वा संपाद्य संधुनुयुरिति ॥ १

स उपकल्पयते—दधि च वाजिनमिश्रं कुम्भीं च शतातृण्णां तिस्रः पालाश्यो मेथ्यो रोहितं चर्मानडुहमाहननार्थमपसलावृत्तां रज्जुं परिश्रयणीं षट्छुतानीष्टका आममया अपरिमिताश्च लोकंपृणा द्वया धानास्तिलमिश्राश्चातिलमिश्राश्चाभिवान्यायै दुग्धमर्धपात्रं समूल बर्हिर्नळेषीकां भुक्तभोगं च वासः क्षेत्रवितृण्णीं चतुरो लोष्टान् पञ्च चरून् पञ्चापूपान् तेषां घृतेनैकोऽभिघारितः शृतेनैकः क्षीरेणैको दध्नैको मधुनैकश्चतुरस्स्तम्बानर्जुनस्तम्बं दूर्वास्तम्बं कुशस्तम्बं काशस्तम्बं चतुरो नानावृक्ष्यान् परिधीन् पर्णमयवारणवैतसशमीमयान् द्वे शाखे वारणशाखां च शमीशाखां च यवान् सर्वौषधं सिकताश्च शुल्बे च तिस्रश्च पर्णशाखाः ॥ २

अथान्तरेण ग्रामं च श्मशानं चागारं वा विमितं वा कारितं भवति ॥ ३

तद्धृधाऽग्निमुपसमाधाय जघनेनाग्निं तिस्रः पालाश्यो मेथ्यो निहत्य तासामन्तरेणास्थिकुम्भं निधाय तदुपरिष्टाच्छतातृण्णामध्युद्यम्य दध्ना वाजिनमिश्रेण पूरयति—‘वैश्वानरे हविरिदं जुहोमि, इमं समुद्रं शतधारम्’ इति द्वाभ्याम् ॥ ४

द्रप्सानुमन्त्रयते—‘द्रप्सश्चस्कन्द पृथिवीमनु द्याम्’ इति ॥

अथैनं रोहितेनानडुहेन चर्मणाऽभिघातमभिघातं त्रिर्- पसलैः पर्यन्ति—'अजिनमौ अजिनमौ' इति । त्रिस्त्रिरेव रात्रेः पर्यन्ति त्रिरह्नः ॥ ६

एवममात्या एवं स्त्रियः ॥ ७

तदनु नर्तक्यश्चानुनृत्येयुः ॥ ८

यश्चापहन्यते खार्यां वा पल्वले वा समवशमयन्ते ॥ ९

यदेषां समवशमतव्यं भवति ते न तथा प्रययुर्यदहर्न पुरस्तात् न पश्चाच्चन्द्रमसं पश्येयुः ॥ १०

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
सप्तदशः खण्डः.

---

ते महारात्र उत्थाथ प्रययुर्ज्ञात्वा श्मशानकरणम् ॥ १

अथैते ब्राह्मणा अभ्रिमादायोत्तरतो गत्वा लोष्टानु- पसंहरन्तीष्टका वा ॥ २

अथैनदादहनमुदकुम्भैः स्ववोक्षितमवोक्षति—'अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अहो- भिरद्भिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै' इति ॥ ३

यथाजीवमुपसर्पेद्विज्ञायते—'न जीवन्तमभि निदध्याद्य ज्जीवन्तमभि निदध्याज्जीवतो ह्येष प्राणानभि निदध्यात्' इति ॥

पर्णशाखया पेटयित्वाऽपसलावृत्तया रज्ज्वा पर्यन्ति— 'प्रेमां मात्रामुपस्नुहि' इति ॥ ५

तस्य मात्रा यदि ग्रीवदघ्नं पश्चात्पुरस्तान्नाभिदघ्नं यदि नाभिदघ्नं पश्चात्पुरस्ताज्जानुदघ्नं यदि जानुदघ्नं पश्चात्पुरस्ताद्गुल्फदघ्नं यदि गुल्फदघ्नं पश्चात्समं भूमेः पश्चात् पुरुषमात्रं भवतीति विज्ञायते ॥ ६

उक्तविधाभ्यां समनु स्पन्द्यां लेखां लिखति ॥ ७

अपोद्धृत्य स्पन्द्यां कर्षूः खानयन्ति । उच्छ्रयन्त्यपरस्याः दक्षिणतश्च पश्चाच्च ह्रसीयसीः कुर्वन्ति ॥ ८

अथ द्वाभ्यामात्मन्यग्निं गृह्णीते—'मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः' इति ॥ ९

स्वयं चितिं जपति—'यास्ते अग्ने समिधो यानि धाम' इति ॥ १०

श्वेतमश्वमभिमृश्यान्तश्शर्करामिमामुपदधाति—'प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति ॥ ११

अथास्यैतत्पुरस्तादेवौदुम्बरं युगलाङ्गलं कारितं भवति सप्तगवं वा त्रयोदशगवं वा युग्मा युक्तस्य भवति ॥ १२

अथानडुहो युनक्ति—'सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभिर्युज्यन्तामघ्नियाः' इति ॥ १३

कृषति—'शुनं वाहाश्शुनं नाराः, शुनासीराविमां वाचम्' इति द्वाभ्याम् ॥ १४

सीतां प्रत्यवेक्षते—'सीते वन्दामहे त्वाऽर्वाची सुभगे भव । यथा नस्सुभगा ससि यथा नस्सुफला ससि' इति ॥१५

अथास्थिकुम्भं सीतायां निदधाति —'सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभिरदिते शं भव' इति ॥ १६

अथानडुहो विमुञ्चति—'विमुच्यध्वमाघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम सुवरगन्म' इति ॥

त एतेऽध्वर्यवो भवन्ति यदि दक्षिणावान् पितृमेधः । यद्यु वै सत्रियोऽग्निर्यथागवं व्युदञ्चन्ति ॥ १८

यत्रैवानड्वाहस्तद्युगलाङ्गलम् ॥ १९

अथैनमुपवातयति—'प्रवाता वान्ति पतयन्ति विद्युतः' इति ॥ २०

अग्निवत्स*वौषधीर्वपति—'यथा यमाय हार्म्यम्' इति।

अत्र सिकता निवपति—'अग्ने तव श्रवो वयः' इति षड्भिरनुच्छन्दसम् ॥ २१

अथोर्ध्वचित उपदधाति—'चितस्स्थ परिचित ऊर्ध्वचितश्श्रयध्वं पितरो देवता। प्रजापतिर्वस्सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति ॥ २२

अथानुव्यूहति—'आ प्यायस्व' इति गायत्र्या ब्राह्मणस्य । 'संते पयाꣳसि' इति त्रिष्टुभा राजन्यस्य ॥ २३

यथासुष्ठु यथाशर्करमनुव्यूहति ॥ २४

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
अष्टादशः खण्डः.

---

* अग्नींत्स.

अथ द्वाभ्यामात्मन्यग्निं गृह्णीते—'मयि गृह्णाम्यग्रे अग्निं, यो नो अग्निः' इति द्वाभ्याम् ॥ १

स्वयं चितिं जपति—'यास्ते अग्ने समिधो यानि धाम' इति ॥ २

श्वेतमश्वमभिमृश्याधिद्रवणं जपति—'अपामिदं न्ययनं, नमस्ते' इति द्वाभ्याम् ॥ ३

अथ क्षेत्रवितृण्णीं चतुरो लोष्टानुपदधाति—'उत्ते तभ्नोमि पृथिवीम्' इति पुरस्तादुपदधाति ॥ ४

'उपसर्प मातरम्' इत्युत्तरतः ॥ ५

'उच्छ्(म्)ञ्चस्व पृथिवि मा विबाधिथाः' इति पश्चात् ॥ ६

'उच्छ्(म्)ञ्चमाना पृथिवी हि तिष्ठसि' इति दक्षिणतः ॥ ७

तया देवतं कृत्वा सूददोहसः* करोति ॥ ८

अथैनं तिलमिश्राभिर्धानाभिरुपकिरति—'एणीर्धाना हरिणीः' इति ॥ ९

अथैतदभिवान्यायै दुग्धमर्धपात्रं दक्षिणत उपदधाति—'एषा ते यमसादने स्वधा निधीयते गृहे । अक्षितिर्नाम ते असौ' इति । अत्र यजमानस्य नाम गृह्णाति ॥ १०

तया देवतं कृत्वा सूददोहसं करोति ॥ ११

अथ दक्षिणतस्समूलं बर्हिर्निदधाति—'इदं पितृभ्यः प्रभरेम बर्हिः' इति ॥ १२

* सूददोहसं.

तया देवतं कृत्वा सूददोहसं करोति ॥ १३

अथ नळेषिकामुपदधाति—'नळं प्लवमारोह' इति ॥

तया देवतं कृत्वा सूददोहसं करोति ॥ १५

अथास्थिकुम्भं भुक्तभोगेन वाससा निर्णिज्य यथाऽङ्गं चिनोति—'सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे। तेभ्यः पृथिवि शं भव' इति ॥ १६

अत्र षड्ढोतारं व्याचष्टे—'षड्ढोता सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः' इति। 'परं मृत्यो अनु परेहि पन्थाम्' इति च ॥ १७

अथैनमुपवातयति—'शं वातश्शं हि ते घृणिश्शमु ते सन्त्वोषधीः। कल्पन्तां मे दिशश्शग्माः' इति ॥ १८

अथैनान् पञ्च चरून् सापूपान् उपदधाति—'अपूपवान् घृतवाꣳश्चरुरेह सीदतूत्तभ्नुवन् पृथिवीं द्यामुतोपरि। योनिकृतः पथिकृतस्सपर्यत ये देवानां घृतभागा इह स्थ। एषा ते यमसादने स्वधा निधीयते गृहेऽसौ' इत्यत्र यजमानस्य नाम गृह्णाति ॥ १९

'दशाक्षरा ताꣳ रक्षस्व' इति पुरस्तादुपदधाति 'अपूपवान् शृतवान्' इत्युत्तरतः 'अपूपवान् क्षीरवान्' इति पश्चात् 'अपूपवान् दधिवान्' इति दक्षिणतः 'अपूपवान् मधुमान्' इति मध्ये 'शताक्षरा सहस्राक्षराऽयुताक्षराऽच्युताक्षरा' इति प्रतिदिशमनुषजति ॥ २०

तयादेवतं कृत्वा सूददोहसः करोति ॥ २१

अथैनं तिलमिश्राभिर्धानाभिरुपकिरति—'एतास्ते स्वधा अमृताः करोमि' इति ॥ २२

अथ चतुरस्स्तम्बान् उपदधाति चरूणामुपरिष्टात्—'त्वामर्जुनौषधीनाम्' इति पुरस्तादर्जुनस्तम्बं 'दूर्वाणां स्तम्बमाहर' इत्युत्तरतो दूर्वास्तम्बं 'काशानां स्तम्बमाहर' इति पश्चात् काशस्तम्बं 'दर्भाणां स्तम्बमाहर' इति दक्षिणतो दर्भस्तम्बम् ॥ २३

चतुर्णां स्तम्बानामग्रैर्मध्यमं चरुमपिदधात्येतैरेव चतुर्भिर्मन्त्रैः ॥ २४

तया देवतं कृत्वा सूददोहसः करोति ॥ २५

अथ चतुरो नानावृक्ष्यान् परिधीन् परिदधाति—मा त्वा वृक्षौ सम्बाधिष्टाम्' इति पर्णमयवारणौ पुरस्ताच्चोत्तरतश्च । 'मा त्वा वृक्षौ सम्बाधेथाम्' इति वैतसशमीमयौ पश्चाच्च दक्षिणतश्च ॥ २६

तया देवतं कृत्वा सूददोहसौ करोति ॥ २७

अत्र नळेषीकावित्येके ॥ २८

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने

एकोनविंशः खण्डः.

---

अथ लोष्टानुपदधाति ॥ १

'पृथिव्यास्त्वा लोके सादयाम्यमुष्य शर्माऽसि पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति शतं पुरस्तादुपदधाति । 'अन्तरिक्षस्य त्वा लोके सादयामि' इति शतमुत्तरतः । 'दिवस्त्वा लोके सादयामि' इति शतं पश्चात् । 'दिशां त्वा लोके सादयामि' इति शतं दक्षिणतः । 'नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयामि' इति द्विशतं मध्ये ॥ २

तया देवतं कृत्वा सूददोहसः करोति ॥ ३

अथ लोकंपृणा उपदधाति—'लोकं पृणच्छिद्रं पृण' इति लोकंपृणाभिस्सहस्रं संपद्यते ॥ ४

द्विषाहस्रादिष्वेतान्येव पुनःपुनरुपदध्यात् ॥ ५

काठकाग्निचितावपि पञ्चाशीतिशतमुपदध्यात् ॥ ६

विज्ञायते—'अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्याऽऽमिक्षया वा' इति काठकाग्नीनां ब्राह्मणम् ॥ ७

तयादेवतं कृत्वा सूददोहसः करोति ॥ ८

अथावद्रुत्य कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति—'पृष्टो दिवि' इति ॥ ९

तयादेवतं कृत्वा सूददोहसं करोति ॥ १०

अथैनमुपवातयति—‘शं वातश्शं हि ते घृणिश्शमु ते सन्त्वोषधीः । कल्पन्तां ते दिशस्सर्वाः’ इति ॥ ११

अथैनमभिमृशति—‘इदमेव मेतोऽपराम्’ इति ॥ १२

पुरस्ताद्वारणीशाखां निदधाति—‘वरणो वारयात्’ इति॥

उत्तरतः क्षेत्रवितृण्णीं निदधाति—‘विधृतिरसि’ इति ॥

पश्चाच्छमीशाखां निदधाति—‘शमि शमयास्मदघाद्वेषाꣳसि’ इति ॥ १५

दक्षिणतो यवान्निदधाति—‘यव यवयास्मदघाद्वेषाꣳसि’ इति ॥ १६

अथैनमुपतिष्ठते—‘पृथिवीं गच्छान्तरिक्षं गच्छ’ इति ॥

जघनेन चितां तिस्रः दक्षिणाप्राचीः कर्षूः कुर्वन्ति । तत्पुरस्ताद्व्याख्यातम् ॥ १८

जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बध्वा विनिस्सर्पन्ति । तत्पुरस्ताद्व्याख्यातम् ॥ १९

यत्रापस्तद्यन्त्यनवेक्षमाणा अपस्सचेला दक्षिणामुखास्स-मृत्तिका आप्लवन्ते—‘धाता पुनातु सविता पुनातु’ इति ॥ २०

नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याचम्यादित्यमुपतिष्ठते—‘उद्वयं तमसस्परि’ इति ॥ २१

अथ गृहानायन्ति । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ २२

अत्र शान्तिं कुर्वन्ति सौत्रामण्याः प्रत्याम्नायो भवत्या-
मिक्षया चेति ॥ २३

संतिष्ठते लोष्टचितिस्संतिष्ठते लोष्टचितिः ॥ २४

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
विंशः खण्डः.

---

अथ गृहानेष्यन्नुपकल्पयते—वारणं स्रुक्स्रुवं च वार
णान् परिधीन् कुशमयं बर्हिः पर्णमयमिध्मं रोहितं चर्मानडुहं
नवं च सर्पिराञ्जनं चाश्मानं चानड्वाहं च शमीशाखां च कुशत-
रुणकानि च दर्भस्तम्बं चाञ्जनं च यवांश्चेति ॥ १

अथान्तरेण ग्रामं च श्मशानं च तद्दूधाऽग्निमुपसमाधाय
कुशमयं बर्हिस्तीर्त्वा वारणान् परिधीन् परिधाय पर्णमयमिध्म-
मभ्यज्य स्वाहाकारेणाभ्याधायाथैतद्रोहितं चर्मानडुहं जघने-
नाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति ॥ २

तदारोहन्ति यावन्तोऽस्य ज्ञातयो भवन्ति—'आरोहतायु-
र्जरसं गृणानाः' इति ॥ ३

अथैनाननुपूर्वं कल्पयति—'यथाऽहान्यनुपूर्वं भवन्ति'
इति ॥ ४

अथ वारणेन स्रुवेण वारण्यां स्रुचि चतुर्गृहीतं गृहीत्वा
जुहोति—'न हि ते अग्ने तनुवै क्रूरं चकार मर्त्यः । कपिर्ब-

भस्ति ते जनं पुनर्जरायु गौरिव । अप नश्शोशुचदघमग्ने शुशु-
ध्या रयिम् । अप नश्शोशुचदघं मृत्यवे स्वाहा’ इति ॥ ५

अथ वारणेन स्रुवेणोपघातं जुहोति—‘अप नश्शोशुच-
दघम्’ इति द्वादश स्रुवाहुतीः ॥ ६

अथोपोत्थायानड्वाहमन्वारभन्ते—‘अनड्वाहमन्वारभामहे
स्वस्तये । स न इन्द्र इव देवेभ्भो वह्निस्संपारणो भव’
इति ॥ ७

प्राञ्चो यान्ति—‘इमे जीवा विमृतैः’ इति ॥ ८

जघन्यश्शमीशाखया पदानि संलोपयन्ते—‘मृत्योः प-
दम्’ इति ॥ ९

अथान्तरेणाग्निं च श्मशानं चाश्मानमुपदधाति—‘इमं
जीवेभ्यः परिधिं दधामि’ इति ॥ १०

अथैताः पत्नयो नवेन सर्पिषा संमृशन्ति–‘इमा नारीर-
विधवाः’ इति ॥ ११

कुशतरुणकैस्त्रैककुदेनाञ्जनेनाङ्क्ते—‘यदाञ्जनं त्रैककुदं जा-
तं हिमवतस्परि’ इति ॥ १२

अथैतानि कुशतरुणकानि समुच्चित्य दर्भस्तम्बे निद-
धाति—‘यथा त्वमुद्भिनत्स्योषधे’ इति ॥ १३

प्रत्येत्य गृहानासन्दीं प्रोष्ठादय आरोहन्ति*—‘अनश्रवो
अनमीवास्सुशेवा आरोहन्तु जनयो योनिमग्रे’ इति ॥ १४

* प्रोष्ठावित्यारोहन्ति.

अजं चैतदहः पचन्ते यवोदनं च ॥ १६

अजस्याश्नन्ति—'अजोऽस्यजास्मदघाद्द्वेषांसि' इति ॥

यवोदनस्य च प्राश्नन्ति—'यवोसि यवयास्मदघाद्द्वेषाँसि' इति ॥ १७

अथास्य श्राद्धं कुर्वन्ति । एकस्यां व्युष्टायां तिसृषु वा पञ्चसु वा सप्तसु वा नवसु वैकादशसु वाऽयुग्मेष्वहस्स्वर्धमासेषु मासेष्वृतुषु संवत्सरेषु वा दद्यात् । काममहरहरेकादशमासान्नयन्ति । न द्वादशमासमभ्यारोहन्ति । संवत्सरेसंवत्सर एतस्मिन्नहनि दद्यात् ॥ १८

य एष एवं विहितोऽनाहिताग्नेः स्त्रियाः पुल्लिङ्गपात्रचयनेष्टकाः केशवपनवर्जं पितुर्मातुराचार्यस्य वा क्रियते ॥ १९

सहस्रदक्षिणो वाऽप्यन्यस्य पितृमेधः ॥ २०

संतिष्ठते पितृमेधस्संतिष्ठते पितृमेधः ॥ २१

इति बोधायनपितृमेधे प्रथमप्रश्ने
एकविंशः खण्डः.

---

अथ गृहानेष्यन् । पृथिव्यास्त्वा लोके । अथ द्वाभ्यामात्मन्यग्निम् । ते महारात्र उत्थाय । एकाहं धुनुयुः । ते यदि पुनर्धक्ष्यन्तः । उत्तिष्ठ प्रेहि । अथातस्संचयनम् । अथ यद्याहिताग्निः । अश्मन्वती । अथैनमादीपयति । अग्नेर्वर्म । इममग्ने । इयं नारी । भुवनस्य पते । अथास्यावकाशम् । पूषेमाः । अथा-

तोऽनुस्तरणीकल्पम् । इदं त्वा वस्त्रम् । परेयुवांसम् । अथ यद्याहिताग्निः ॥ २१

अथ यद्याहिताग्निः । परेयुवांसम् । इदं त्वा वस्त्रम् । अथातोऽनुस्तरणीकल्पम् । पूषेमाः । अथास्यावकाशम् । भुवनस्य पते । इयं नारी । इममग्ने । अग्नेर्वर्म । अथैनमादीपयति । अश्मन्वती । अथ यद्याहिताग्निः । अथातस्संचयनम् । उत्तिष्ठ प्रेहि । ते यदि पुनर्धक्ष्यन्तः । एकाहं धुनुयुः । ते महारात्र उत्थाय । अथ द्वाभ्यामात्मन्यग्निम् । पृथिव्यास्त्वा लोके । अथ गृहानेष्यन् ॥ २१

इति बोधायनीये पितृमेधसूत्रे
प्रथमः प्रश्नः.

---

यथो एतदाहिताग्नेर्निमारं गच्छतः प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् प्रतिकृष्यामावास्यां यजेतेति तथैते कर्मणी अभि सञ्चरेद्यथा जीवतः कृते स्याताम् ॥ १

स उ चेदहुते प्रातरग्निहोत्रेऽनिष्टायाममावास्यायां प्रेयात्तदानीमेवास्य तूष्णीं प्रातरग्निहोत्रं यादृक्कीदृक्च होतव्यं तदानीमेवास्य तूष्णीममावास्यां यादृशीं कीदृशीं च यजेतेति ॥ २

स उ चेत्पुनरागतस्स्यात् पुनरेवास्य प्रातरग्निहोत्रं काल्यमव्यापन्नं होतव्यं पुनरेवामावास्यां काल्यामव्यापन्नां यजेतेति ॥ ३

यथो एतन्न पयस्समासिञ्चन्तीत्यामिक्षार्थं पयोऽवशेषयेयुरित्येवेदमुक्तं भवति ॥ ४

यथो एतदासन्द्यामौदुम्बर्यामासन्द्यामित्येवेदमुक्तं भवति॥

यथो एतदन्तर्वेदि शरीराणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति पात्रचयनप्रभृति सिद्धमत ऊर्ध्वम् ॥ ६

एतावदेव नाना नात्र गोरालम्भोऽनुस्तरणीकाले कुशतरुणकैश्शुष्कगोमयैर्घृतेनेत्यनुस्तरणीयात् 'अग्नेर्वर्म परि गोभिर्व्ययस्व' इत्येतदेव पर्णत्सरुषु । अपि वा यथेष्टिकल्पे । अपि वा तूष्णीं सर्वं कृत्वाऽन्यत्र गोरालम्भादिति । अपि वा तूष्णीमेव पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति । अपि वाऽन्यत्र चैव गोरालम्भादिति ॥ ७

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
प्रथमः खण्डः.

---

अथ वै भवति प्रजापतिः प्रजास्सृष्ट्वा वृत्तोऽशयत्तं देवा भूतानां* रसं तेजस्संभृत्य तेनैनमभिषज्यन्निति तत्पृच्छन्ति कतमद्ब्राह्मणानां तेजो रसो येनैनमभिषज्यन्निति चतुर्होतार इत्येव ब्रूयात् ॥ १

---

* ख. ब्रा ना .

तस्य सग्रहैर्होतृभिर्होमो भर्तृसूक्तेन भरणं पत्नीभिरुपसंवेशनं दक्षिणाप्रतिग्रहैर्निर्मार्गो हृदयैः हिरण्यशकलान्* सम्भारैः पात्रचयः ज्योतिष्मतीभिरुपोषणं नारायणाभ्यां 'ब्राह्मण एकहोता' इति चोपस्थानं 'प्रयासाय स्वाहा' इत्याज्याहुतीः 'चित्तं संतानेन' इति हविराहुतीः मृत्युसूक्तेनानुशंसनं सौम्यया संगाहनमीयुष्ट्याऽवगाहनं सौर्येणादित्यस्योपस्थानमिति तानेतान् परं ब्रह्मेत्याचक्षते ॥ २

तान्न साधारणे श्मशाने प्रयुञ्जीत नानाचार्याय नाश्रोत्रियाय नागुरवे† ॥ ३

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
द्वितीयः खण्डः.

---

यथो एतद्धविर्यज्ञियं निवपनं पुनर्दाहश्चेति यदहस्सञ्चिनुयात्तदहरेवैतत्कुर्यात् ॥ १

कुम्भान्तमनाहिताग्नेः स्त्रियाश्च निवपनान्तं हविर्यज्ञयाजिनः‡ पुनर्दहनान्तं सोमयाजिनाश्चित्यन्तमग्निचितो यदीतरं यदीतरमघोदकमुत्सिच्य दशरात्रमाशौचम् ॥ २

दशरात्रे शौचं कृत्वा शान्तिः ॥ ३

अथ यदि चितिश्चित्यन्ते शौचम् ॥ ४

---

* ख. हिरण्यशकलात्. † ख. 'नाब्रह्मविदे कामं पित्रे च' इत्यधिकम्.
‡ ख. हविर्याजिनः.

चित्याः प्राक्पूर्भ्यः कृत्वा श्वोभूते धवनेनैव प्रतिपद्यते॥

प्रसिद्धमतऊर्ध्वमथैतेषामुदकम् ॥ ६

सपिण्डानां सबान्धवानां मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमात् पुरुषादाचार्यान्तेवासिनोश्च सपत्नीकानां सापत्यानां सपिण्डानां दशरात्रं त्रिरात्रमितरेषाम् ॥ ७

बाले देशान्तरस्थे च सद्यश्शौचमित्येके ॥ ८

एवं नित्योदकतर्पणेऽनुस्मरणं स्त्रीयाज्याशिष्याणाम् ॥ ९

न प्राक् चौळात् प्रमीतानां दहनं विद्यते ॥ १० 

नानुपनीतानां कन्यानां वा पितृमेधः ॥ ११

अनुपनीतानां कन्यानां वा पुनर्दहनमन्त्रेण दहेयुः ॥ १२

नानाहिताग्नेः पात्रचयो विद्यते ॥ १३

नापशुबन्धयाजिनां गौच्छगलाः ॥ १४

नासन्नयतामामिक्षा ॥ १५

नाग्निचितां चितिः ॥ १६

न स्त्रीणां केशवपनं विद्यते न चितिर्नेष्टका न पुनर्दाहो दारुवत्स्त्रीणां पात्राणि भवन्तीति विज्ञायते ॥ १७

बह्वृचां पितृमेधे स्त्रीणामिमान्मन्त्रानुपोद्धरेत् ॥ १८

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने तृतीयः खण्डः.

---

ख. यथैते.

'इयं नारी पतिलोकम्, उदीर्ष्व नार्यभिजीवलोकं, सुवर्णं हस्तात्, धनुर्हस्तात, मणिं हस्तात्, मैनमग्ने, शृतं यदा, अजो भागस्तपसा, अयं वै त्वम्, इदं त एकम्, यौ ते श्वानौ, यत्ते कृष्णः, उत्तिष्ठ प्रेहि, अस्मात्त्वम्, अपेत वीत, उच्छ्वञ्चस्व पृथिवि मा विबाधिथाः' इति ॥ १

मृतपत्नीकः क्रतूनाहरिष्यन् जायामुपयम्याग्नीनादध्यात् । विज्ञायते च—'तस्मादेको द्वे जाये विन्दते, तस्मादेको बह्वीर्जाया विन्दते' इति च ॥ २

मृतपतिकाया औपासने पितृमेधः ॥ ३

न ह्यस्या अपतित्वात् पुनरग्न्याधेयं विद्यते । विज्ञायते च—'तस्मान्नैका द्वौ पती विन्दते' इति ॥ ४

'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इत्यविशेषाज्जायापत्योराहिताग्न्योरित्येवेदमुक्तं भवति ॥ ५

तयोर्यः पूर्वो म्रियेत तस्याग्निभिरेतया यज्ञपात्रैश्च पितृमेधः, यः पश्चात्तस्यौपासनेन ॥ ६

सह प्रमीतयोस्सहैकः पितृमेधः ॥ ७

औपासनस्योल्मुकार्थत्वादौपासनेऽविद्यमाने निर्मन्थ्येन पितृमेधः ॥ ८

'औपासनेनानाहिताग्निम्' इत्यविशेषाज्जायापत्योरनाहिताग्न्योरित्येवेदमुक्तं भवति ॥ ९

तयोर्यः पूर्वो म्रियेत तस्यौपासनेन पितृमेधः, यः पश्चा

त्तस्य निर्मन्थ्येन ॥ १०

उत्तपनीयमेके समामनन्ति ॥ ११

निर्मन्थ्येन स्त्रीकुमाराणां दहेयुरित्येकेषाम् ॥ १२

मृतपत्नीकस्याग्निभिर्जायायां दग्धायामौपासने का प्रतिपत्तिरिति ॥ १३

क्रतूंश्चेदाहरिष्यन् स्याद्ब्रह्मौदनिकमेनं कुर्यात् ॥ १४

वनं चेदातिष्ठेदौपासनमेवोपास्यन् स्यात् ॥ १५

आत्मानं चेद्युञ्ज्यादात्मन्येनं समारोपयेत् ॥ १६

अथ चेत्संन्यसेत् नैनमाद्रियेत ॥ १७

यथो एतत् ग्रहानेष्यन्नुपकल्पयत इति स्वान् स्वान् गृहस्थधर्मान् प्रतिपत्स्यन्निसेवेदमुक्तं भवति ॥ १८

नाशुचिः काम्यं तप आतिष्ठेन्न यजेन्न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपौर्णमासाभ्यां न दद्यात् कामम्रत्विग्भ्यो दद्यात् ॥ १९

कथमु खलु प्राचीनावीतिना पितृमेधः कर्तव्योऽन्यत्र यज्ञोपवीतिनेति । प्राचीनावीतिनेत्येव ब्रूयात् । विज्ञायते च— 'पितृणां वा एष मेधो देवानां वा अन्ये मेधाः' इति ॥ २०

निवीतिनस्त्वेवैनं वहेयुश्चितायां चादध्युः ॥ २१

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने चतुर्थः खण्डः.

---

अथ यदि नष्टाग्निरपहृताग्निर्विधुराग्निर्विच्छिन्नाग्निरुत्सृष्टाग्निस्समारूढाग्निर्वा यजमानः प्रेयाद्यद्यस्य पुत्रो वाऽन्तेवासी वाऽलं कर्मणस्स्यात् प्राचीनावीतं कृत्वोद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यस्यायतनेऽरणीं निधाय प्रेतस्य दक्षिणं बाहुमन्वारभ्य मन्थति—'येऽस्याग्नयो जुहुतो मांसकामास्सङ्कल्पयन्ते यजमानं जायन्तु ते हविषे स्वादिताय स्वर्गलोकमिमं प्रेतं नयन्तु' इति ॥ १

मथित्वाऽग्नीन्विहृत्य तूष्णीं विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय द्वादशगृहीतेन स्रुचं पूरयित्वा पुरुषसूक्तेन मनसाऽनुद्रुत्याहवनीये जुहोति ॥ २

एतेनैव गार्हपत्ये जुहोति ॥ ३

तूष्णीमन्वाहार्यपचने हुत्वा तदूर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ ४

अथ यद्यात्मनि समारूढेष्वग्निष्वरण्योर्वा यजमानो म्रियेत यद्यस्य पुत्रोऽन्तेवासी वाऽलं कर्मणस्स्यात् प्राचीनावीतं कृत्वोद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यायतने लौकिकमग्निमुपसमाधाय प्रेतस्य दक्षिणं बाहुमन्वारभ्य जपति—'उपावरोह जातवेद इमं तं स्वर्गाय लोकाय नय प्रजानन् । आयुः प्रजां रयिमस्मासु धेहि प्रेताहुतीश्चास्य जुषस्व सर्वाः' इति ॥

अपि वाऽरण्योरुपावरोह्य मथित्वा तूष्णीं विहारं कल्पयित्वा गार्हपत्ये जुहोति—'हिरण्गर्भस्समवर्तताग्रे' इत्या-

न्तादनुवाकस्य प्रत्यृचं हुत्वा पूर्णाहुतिं हुत्वाऽत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ ६

अथ यदि समारूढस्स्यान्मथ्यमानेन्वारभ्यैतामृचं जपति। प्रसिद्धमत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ ७

इति बौधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
पञ्चमः खण्डः.

---

अथो एतत्परोक्षमेतस्य यजमानस्यास्थान्याहृत्य संस्कुर्यादिति कथमत्राहरणं विद्यत इति ॥ १

शिरस्तः प्रथमं गृहीत्वाऽथोरस्तोऽथो जठरतोऽथोरुबाहुभ्यामथ पत्त इति त्रयास्त्रिंशतमस्थानि गृह्णातीति विज्ञायते— 'त्रयास्त्रिंशत्पुरुषः' इति ॥ २

अथैतान्यस्थान्याद्भिः प्रक्षाल्य कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नस्थानि सम्भरति—'इन्द्रो दधीचो अस्थभिः' इत्येतेनानुवाकेन ॥ ३

अत्र तयादेवतं करोति—'तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति ॥ ४

अथ सूददोहसं करोति—'ता अस्य सूददोहसस्सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वारोचने दिवः' इति ॥ ५

दीर्घवंशे विग्रथ्याक्षारलवणाशिनो मृण्मयभोजना आहरन्ति ॥ ६

तानि ग्राममर्यादायां निधायाग्नीनुपनिर्हृत्य पैतृमेधिकं कर्म प्रतिपद्यते ॥ ७

नासति यजमाने ग्राममर्यादामातिहरेयुः ॥ ८

यद्यातिहरेयुरग्नयो लौकिकासम्पद्येरन् । विज्ञायते—'प्रवसन् वसति यजमानोऽग्निभ्यः परिदाय गृहानेति तस्मात् ग्राममर्यादां नाति व्रजन्ति' इति ॥ ९

अथ यदि परोक्षप्रेतस्य यजमानस्य दिगेव प्रज्ञायते तां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्राहमाहूय पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ १०

अथ यदि परोक्षप्रेतस्य यजमानस्य दिगपि न प्रज्ञायते इमां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्रहमाहूय पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ ११

अथ यदि यजमाने म्रियमाणे पत्न्यालम्भुका * स्यात् कथं तत्र प्रायश्चित्तं ?। द्वादशगृहीतेन स्रुचं पूरयित्वा दुर्गामन-

* ख. पत्न्यनालम्भुका.

स्वतीमहाव्याहृतीर्हुत्वा 'तद्यमो राजा' इति द्वाभ्यां पूर्णाहुतिं हुत्वा यद्यर्थिनो विन्देरंस्तेभ्यो धेनुं दद्यादिति ॥ १२

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
षष्ठः खण्डः.

---

यद्येवं कृतेऽग्निभिर्यजमानः पुनरागच्छेत् कथं तत्र कुर्यादिति ॥ १

यज्ञियात् काष्ठादग्निं मथित्वाऽग्निमुपसमाधाय सम्परिस्तर्याग्निमुखात् कृत्वा पक्वाज्जुहोति—'हिरण्यगर्भस्समवर्तताग्रे, इति द्वाभ्याम् ॥ २

अथाज्याहुतीरुपजुहोति—'सहस्रशीर्षा' इत्येतेनानुवाकेन प्रत्यृचम् ॥ ३

स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ ४

अपरेणाग्निं सौवर्णेन पात्रेण घटेन वा मृण्मयेन कृष्णाजिनेन वा दृतीभूतेन घृतेनाद्भिः पूरयित्वा जीवपितुश्चेत् पिताऽभिमन्त्रयते—'विष्णुर्योनिं कल्पयतु' इति ॥ ५

अथैनं प्रवेशयाति—'त्वां पूषंच्छिवतमामेरयस्व' इति ॥ ६

स गर्भो भूत्वा कृष्णाजिनदृतावेतां रात्रीं वसति ॥ ७

व्युष्टायां पुंसवनप्रभृत्या जातकर्मणः कारयित्वा जघनार्धादात्मानमपकृष्य जायेत ॥ ८

जातस्य जातकर्मप्रभृति संस्कारान् कारयित्वा द्वादशरात्रमेतत् व्रतं चरेत् ॥ ९

तयैव भार्ययाऽग्नीनाधाय व्रात्यैनैन्द्राग्नेन पशुना यजेत॥

गिरिं गत्वाऽग्नये कामायेष्टिं निर्वपेदायुष्मतीं शतकृष्णलाम् ॥ ११

दिशामवेष्ट्या वा यजेत ॥ १२

अत ऊर्ध्वमीप्सितैः यज्ञक्रतुभिर्यजेतेति विज्ञायते ॥१३

हिरण्यगर्भस्सम्भूतो ब्राह्मणश्चीर्णानिर्णयः * ।
प्रत्युत्थानं न कस्यापि कुर्याद्देवसमस्तु सः ॥

इति विज्ञायते ॥ १४

तस्मात्प्रोषिते यजमाने चतुर्विंशतिवर्षाणि परिपाल्याग्निहोत्रं संस्कुर्याद्यद्यश्रुतं स्यादिति ॥ १५

अथ यद्याग्रयणेष्टिपशुचातुर्मास्याध्वराणामसमाप्तानां व्रतान्तराळे प्रमीयेत यद्यस्य पुत्रोऽन्तेवासी वा शेषांश्चैकतन्त्रे समाप्नुयात् ॥ १६

पश्वलाभे तत्तद्देवत्यं पुरोडाशमामिक्षां वा यजेत ॥ १७

अथ वै भवति 'तमसो वा एष तमः प्रविशति य आहिताग्निमन्यैरग्निभिस्संस्कुर्यात्' इति ॥ १८

अथाप्युदाहरन्ति—'शरीरदायादा ह वाऽग्नयो भवन्ति' इति । मरणे श्रेयोऽवाप्तिः । 'य एवं विद्वानुदगयने प्रमीयते सौर्येण पथा स्वर्गं लोकमेत्यथ यो दक्षिणे प्रमीयते चान्द्रम-

---

* ख, छिन्ननिर्णयः

सेन पथा पितृलोकमेति' इति विज्ञायते ॥ १९

'ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्' इत्याहुतिभिष्षड्भिरेवैनं पूर्वपक्ष उदगयन आहरोदिति ॥ २०

'उदगयन आपूर्यमाणपक्षे दिवा कृत्वन्ते श्रेयो मरणम्' इत्युपदिशन्ति ॥ २१

अन्येषु वा नियमीभूतेषु सत्रेषु दीक्षितप्रमीतप्रायश्चित्तवदेकाहेऽहीने च कुर्यादिति कुर्यादिति ॥ २२

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने

सप्तमः खण्डः.

---

अथ द्विजातीनां पापकर्मणामज्ञातमृतनां मुख्यमेव शरीरसंस्कारं कुर्वन्ति । तदानीमेव प्रायश्चित्तं कुर्वन्ति ॥ १

सर्पदष्टमृतानां 'नमो अस्तु सर्पेभ्यः' इति तिस्र आहुतीर्जुहुयात् ॥ २

जले मृतानां 'इमं मे वरुण, तत्त्वा यामि' इति द्वाभ्याम् ॥ ३

समुद्रे मृतानां 'समुद्राय वयुनाय' इत्यृचा ॥ ४

पश्वादिभ्यो मृतानां 'आ गावः, इन्द्रो यज्वने' इति द्वाभ्याम् ॥ ५

अशनिपातमृतानां 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम् । 'मूर्धानं दिवः' इत्येतया वा ॥ ६

अथ सूतिकाया उदक्याया आशौचिनां वा मरणे आशौचकालेऽतीते वा तावत्कालं शरीररक्षणाशक्तौ मृद्भस्ममिश्रितेन पञ्चगव्येन गोमूत्रेण वा कुशैः प्रोक्षति । सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरिति ॥

शतरुद्रियेण 'अग्निर्मूर्धा' इत्यनुवाकेन चेत्येके ॥ ८

अथान्येन वाससाऽऽच्छाद्य विधिना दहेत् ॥ ९

अथानाहिताग्नेरौपासनं सायमुपक्रमं प्रातरपवर्गमित्यादि समानं भवति ॥ १० 

अथ यद्यार्तस्स्यादौपासनं विच्छिद्येत द्वादशाहादूर्ध्वंमार्ष्टिं वा कर्तुमशक्तः आज्यं संस्कृत्य चतुर्गृहीतेनाज्येन यावदाम्नातमाज्याहुतीर्जुहोति ॥ ११

इति बोधायनीयपितृमेधसूत्रे
अष्टमः खण्डः

---

* अथैकोद्दिष्टेष्वादित एव प्राचीनावीतं कृत्वा दक्षिणाप्रत्यक्प्रवणं स्थण्डिलं कृत्वा सकृदुल्लिख्याद्भिरभ्युक्ष्याग्निं प्रतिष्ठाप्य परिस्तृणाति—पुरस्ताद्दक्षिणाग्रानुत्तरतः प्रागग्रान् पश्चाद्दक्षिणाग्रान् दक्षिणतः प्रागग्रानुत्तरानुत्तरान् दक्षिणानधरान् ॥ १

*एतन्नवमखण्डमारभ्य चत्वारः खण्डाः क. पुस्तकमात्रे वर्तन्ते.

दक्षिणेनाग्निं दक्षिणाग्रान दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि संसादयति—अथाज्यस्थालीं स्रुवमौदुम्बरं दर्वीं तिलोदकपात्रं प्रोक्षणीपात्रमुद्धरणीयं पात्रमिति ॥ २

तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य सिद्धमोदनं सविशेषमानीय दक्षिणतो निधाय नात्रापूपमथाज्यं निर्वपति ॥ ३

दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रित्याभिद्योतनेनाभिद्योत्य दर्भाग्रं प्रत्यस्य पुनरभिद्योत्य सिद्धमोदनं सहापसलैः पर्यग्निकृत्वा स्रुवं च दर्वीं च सम्मृज्य सविशेषमोदनं प्रतिष्ठितमभिधारयति ॥ ४

पवित्रं कृत्वा तिलोदकपात्रे निधायाप आनयन्नाह—

'आम आगच्छतु प्रेतो देवयानान् समुद्रान् सलिलान् सवर्णानस्मिन् यज्ञे सर्वकामं लभतेऽक्षीयमाणामुपदुह्यतामिमां प्रेताय वो गृह्णामि' इति पुंसाम्। 'प्रेता देवयानान्....प्रेतायै वो गृह्णामि' इति स्त्रीणाम् ॥ ५

अपोद्धृत्य पवित्रं तिलानावपति—'तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नवद्भिः प्रत्नयेहि प्रेतामिमान् लोकान् प्रीणयाहि नः' इति पुंसाम्। 'प्रेताम्' इति स्त्रीणाम् ॥ ६

अथ तिरः पवित्रं मध्वानयति—'मधु वाता ऋतायते' इति तिसृभिरनुच्छन्दसम् ॥ ७

अथैनत्सर्वाभिरङ्गुलीभिस्समुदायुत्याभिमृशति—'सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाहि' इति ॥ ८

तस्मिंश्चित्किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्येमां दिशं निरस्यति—'अवेष्टा दन्दशूका निरस्तं नमुचेश्शिरः' इति ॥ ९

अथाप उपस्पृश्य पुनरेवाभिमृशति—'शं नो देवीर-भिष्टये। आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः' इति ॥

अथैनद्गन्धपुष्पैरभ्यर्च्य दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्य भोज-नस्थानेष्वासनेषु च तिलान् सिकताश्च संप्रकिरति—'अप-हता असुरा रक्षाꣳसि पिशाचा ये क्षयन्ति पृथिवीमनु। अन्यत्रेतो गच्छन्तु यत्रास्य गतं मनः' इति पुंसाम्। 'यत्रा-स्या गतं मनः' इति स्त्रीणाम् ॥ ११

अथैनदद्भिरवोक्षति—'उदीतामवर उत्पर उन्मध्यमः प्रेतस्सोम्यः । असुं य इयायावृक ऋतज्ञस्स नोऽवतु प्रेतो हवेषु' इति पुंसाम् 'उदीतामवरोत्परोन्मध्यमा प्रेता सोम्या। असुं येयायावृकर्तज्ञा सा नोऽवतु प्रेता हवेषु' इति स्त्रीणाम्॥

अत प्रेतमावाहयति—'आयाहि प्रेत सोम्य गम्भीरैः पथिभिः पूर्व्यैः । प्रजासस्यभ्यं दददूयिं च दीर्घायुत्वं च शत-शारदं च' इति पुंसाम्। 'आयाहि प्रेते सोम्ये गम्भीरैः

पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददती रयिं च दीर्घायुत्वं च शतशारदं च' इति स्त्रीणाम् ॥ १३

अथ ब्राह्मणानाहूय सुप्रक्षालितपाणिपादानप आचमय्य सदर्भोपक्लृप्तेष्वासनेषूपवेश्य तेषां सपवित्रेषु पाणिषु तिलोदकं ददाति—'अमुष्मै तृप्तिरस्तु' इति 'अस्तु तृप्तिः' इतीतरेषां प्रतिवचनम् ॥ १४

अथैनान् वस्त्रगन्धपुष्पमाल्यैस्संपूज्य शुद्धोदकं दत्वा पूर्ववत्तिलोदकम् ॥ १५

अथैनान् पृच्छति—'करिष्यामि' इति । 'कुरुष्व' इतीतरे प्रत्याहुः ॥ १६

अथाभ्यनुज्ञातो दर्व्यामुपस्तीर्य सर्वस्मात्सकृत्सकृत्समवदायाभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात्—'प्रेतायामुष्मै यमाय च स्वाहा' इति । तद्धुतमहुतं च भवति ॥ १७

अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य दक्षिणाग्रेषु दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्याभिमृशति—'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्यक्षितमसि मा प्रेतस्य क्षेष्ठा अमुत्रामुष्मिन् लोके' इति ॥ १८

अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणस्याङ्गुष्ठेनानखेनानुदिशति—'अमुष्मा उपतिष्ठतु' इति । भुञ्जानान् समी-

क्षते—'प्राणे निविष्टोऽमृतं जुहोमि' इति पञ्च 'ब्रह्मणि म आत्माऽमृतत्वाय' इत्यात्मानम्। न चात ऊर्ध्वं निरीक्षते ॥

तृप्तानप आचमय्य 'स्वदितमुच्यताम्' इति 'अस्तु स्वदितम्' इतीतरेषां प्रतिवचनम् ॥ २०

पूर्ववत्तिलोदकं दत्वाऽऽशयेष्वन्नशेषैः पिण्डान् ददाति—'अमुष्मा उपतिष्ठतु' इति सक्षाळनेनापसव्यं 'तृप्यस्व' इति परिषिच्य दक्षिणां दत्वाऽक्षय्यं वाचयित्वा यज्ञोपवीत्य-भिवादनं कृत्वा उत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेसान्नशेषान्निवेदयते। यथाब्रूयुस्तथा कुर्यात्। तृतीये पक्षे द्वितीयम्। सन्ततमेकैकेनैकादश मासान्न-यन्ति। न द्वादशमासमभ्यारोहन्ति ॥ २१

इति बोधायनपितृमेधे द्वितीयप्रश्ने
नवमः खण्डः.

---

अथैकोद्दिष्टे प्राप्ते विप्राभावे द्रव्याभावे वा कथमत्र कुर्यादिति!। द्वात्रिंशत्कबळेन सघृतपायसेनाग्नावेव कुर्यादिति विज्ञायते ॥ १

अथ कर्ता स्नात्वा शुचौ देशे ब्राह्मणानाहूयानुज्ञाप्य पूर्ववत्प्रेतावाहनान्तं कृत्वाऽग्निं प्रेताकारं ध्यात्वाऽऽसनं पाद्य-माचमनीयं तिलोदकं चाग्निसमीपे दक्षिणतो दत्वाऽथ तिलग-

न्धपुष्पमाल्यैरग्निमभ्यर्च्य तथा तिलोदकम् । अथ ब्राह्मणै-रनुज्ञातोऽग्निं परिषिच्य व्याहृतीभिर्हुत्वा प्रेताहुतिं जुहुयात् । तस्मिन् हविषि मुष्टिप्रमाणं घृततिलमिश्रमुपस्तीर्णाभिघारितं द्वात्रिंशत्कबळं दर्व्या जुहोति—'यमाय सोमं, यमाय घृत-वत्' इति द्वाभ्याम् ॥ २

अथ दर्वीं प्रहृत्याभिहुत्य तिलोदकं चरुशेषेण पिण्डं च दत्वा तिलोदकपात्रमानीय 'तृप्तिरस्तु' इति परिषिच्या-पसव्यमथ ब्रह्मसमूहमग्निं च प्रदक्षिणीकृत्य यथाशक्ति दक्षिणां दत्वा 'प्रेततृप्तिरस्तु' इति वाचयित्वाऽऽशिषो वाचयित्वाऽथ व्याहृतीभिर्हुत्वा दर्भान् प्रहृत्याग्निं परिषिच्य पिण्डमप्सु प्रक्षिप्य स्नात्वा पुण्याहं वाचयित्वा प्रोक्षति ॥ ३

अथाप्युदाहरन्ति—

आद्यश्राद्धे तु संप्राप्ते विप्राभावे कथं भवेत् ।
द्रव्याभावे तु कुर्वीत चरुणा पायसेन तु ॥ ४

अग्नौ हुत्वा यमायेति द्वाभ्यां द्वात्रिंशदाहुतीः ।
प्रेतस्तृप्तिमवाप्नोति पुण्यलोके महीयते । इति ॥ ५

अथ नवश्राद्धं विच्छिद्येतैतस्मिन्नाह्नि कुर्यात् अथाप्यु-दाहरन्ति—चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥ ६

एकोद्दिष्टे नवश्राद्धे यदि विघ्नः प्रवर्तते ।
तिथिवारादिभिः कुर्यात्प्राप्तमेकादशेऽहनि ॥ इति ॥ ७

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
दशमः खण्डः.

---

'संवत्सरे सपिण्डीकरणं साग्नौकरणम्' इति तत्पुरस्ताद्व्याख्यातमेतावदेव नाना ॥ १

द्वे स्थण्डिले करोति दक्षिणतश्चोत्तरतश्च दक्षिणतो मासिश्राद्धवदुत्तरत एकोद्दिष्टवत् । दक्षितोऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा विश्वेभ्यो देवेभ्यो ब्राह्मणावुपवेश्य गन्धपुष्पधूपदीपैरभ्यर्च्य वैश्वदेवेन चरुणाऽनुदिश्य 'विश्वेभ्यो देवेभ्यस्स्वाहा' इत्यथ प्राचीनावीतं कृत्वा पूर्ववत्तिलोदकं संयुज्याथोत्तरत उल्लेखनप्रभृत्या परिषेचनात्कृत्वा पवित्रं कृत्वा तिलोदकपात्रे निधायाप आनयन्नाह—'आम आगच्छतु प्रेतो देवयानान्समुद्रान्सलिलान्सवर्णान् । अस्मिन् यज्ञे सर्वकामं लभतेऽक्षीयमाणमुपदुह्यतामिमाम् । प्रेताय वो गृह्णामि' इति पुंसाम् । 'प्रेता देवयानान....प्रेतायै वो गृह्णामि' इति स्त्रीणाम् ॥ २

अपोद्धृत्य पवित्रं तिलानावपति—'तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवाद्भिः प्रत्नस्स्वधयेहि प्रेत-

मिमान् लोकान् प्रीणयाहि नः स्वधा नमः' इति पुंसाम्। 'प्रेताम्' इति स्त्रीणाम्। स्वधाशब्दो नमस्कारशब्दो नमस्काराभिधेयत्वात्॥ ३

मध्वानयनप्रभृति समानमा प्रेतावाहनात्॥ ४

दक्षिणस्य पितृणामावाहनप्रभृति तिलोदकदानान्तं कृत्वाऽथोत्तरस्य 'अमुष्मै स्वधानमः' इति तथाऽलङ्कृत्य ददाति। 'अग्नौ करिष्यामि' इति 'कुरुष्व' इतीतरे प्रत्याहुः॥ ५

अथाभ्यनुज्ञातः परिधानप्रभृत्याऽन्नाभिमर्शनात्कृत्वाऽथोत्तरस्य परिषेकं कृत्वा व्याहृतीभिर्हुत्वा दर्व्यामुपस्तीर्य सर्वस्मात्सकृत्सकृदवदायाभिघार्य दक्षिणतो भस्मामिश्रानङ्गारान्निरूह्य तेषु जुहुयात्—'प्रेतायामुष्मै यमाय च स्वधा नमस्स्वाहा, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा' इति दक्षिणार्धपूर्वार्धे॥ ६

अथौदनं पात्रेषूद्धृत्य दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्याभिमृशति—'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्यक्षितमसि मा प्रेतस्य क्षेष्ठा अमुत्रामुष्मिन् लोके' इत्यभिमृश्य निधायाथ दक्षिणस्य ब्राह्मणानामङ्गुष्ठेनानखेनानुदिशति—'अमुष्मै स्वधानमोऽमुष्मै स्वधा नमः' इति॥ ७

अथोत्तरस्य तन्मन्त्रेणानुमन्त्रणं परिषेचनादि तत्राभिश्रावणान्तं कृत्वा तृप्तानप आचमय्याशयेष्वन्नशेषान् संप्रकीर्य

